।। शिवाभ्यां नमः ।।

## ।। तारावली स्तोत्रम् ।।

निरवधिकरुणार्द्रैर्निह्नुताशेषदोषैः
अमृतरसझराणां अन्तरङ्गैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १

श्रियमवनतिभाजां श्रेयसामादधानैः
अमृतरसतरङ्गश्रीधुरीणैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २

गजमुखशरजन्मप्रेमगाढोपगूढैः
नगदुहितुरमन्दानन्दमूलैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ३

गिरिवरतनयायाः केळिकोपे नतस्तत्
चरणनखरुचिश्रीवर्मितैरीक्षणैर्द्राक्।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ४

स्मरहरदयनीयास्मीत्युमायां वदन्त्यां
दरहसितमुखेन्दुस्तामपाङ्गैः पिबद्भिः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ५

नमदमरकिरीटक्रीडदुद्दण्डशुण्डा-
मुखमिभमुखमारादापिबद्भिः कटाक्षैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ६

समदधत मृकण्डोरात्मजे चोपमन्यौ
समभिलषितसिद्धिं ये कटाक्षाङ्कुरास्तैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ७

मकुटशशिकिशोरस्यन्दिपीयूषधारा-
मधुरशिशिरभावस्तोमचोरैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ८
प्रणमदमरमौळि प्रस्फुरद्रत्नबृन्द-
प्रसृमरकिरणश्रीदत्तहस्तैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ९
प्रणमनकृतिसृष्टा शम्भुना पद्मपङ्क्ति-
प्रविततिरियमित्यध्यस्यमानैरपाङ्गैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १०
प्रणमनपरसंसन्मोक्षसाम्राज्यलक्ष्मी-
वरणकमलमालोदारयापाङ्गभङ्ग्या।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। ११
गदगणगळनायुः कल्पनोदूढदीक्षैः
अभिमतसकलार्थादानदक्षैः कटाक्षैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १२
भवभरतपतापोपप्लुतानां नतानां
श्रमहृदमृतवृष्ट्या सान्द्रकारुण्यदृष्ट्या।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १३
दळमपिकुसुमं वा दत्तवद्भ्यो जनेभ्यो
विधिवलमथन श्रीविक्रयिण्या दृशा द्राक्।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १४
अवनमनपराणां आत्मतत्त्वावबोध-
प्रकटनपटुदीपैः प्रस्फुरद्भिः कटाक्षैः।

अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १५
अवनमनपराणां आयुरारोग्यवृद्धिं
निजचरणरतिञ्चोदञ्चयद्भिः कटाक्षैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १६
हृदि विनतजनानां भक्तिकल्पद्रुवल्ली-
जनिकृदमृतसेकैर्विस्फुरद्भिः कटाक्षैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १७
गजवदनकराग्राकीर्यमाणस्वचूडा-
तटवरसरिदूर्म्यासेचनैस्तापहारी।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १८
निजमकुटतटाञ्चन्निम्नगावीचिविप्रुट्-
प्रकरविकसनेन प्रापयन् तापशान्तिम्।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। १९
प्रथमभिषगधीशख्यातिमूर्जस्वलां स्वां
प्रविदधदवनम्र व्यूहसर्वार्तिहृत्या।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २०
प्रवणजनविमोहध्वान्तविध्वंसकेळी-
पटुतरदरहास प्रस्फुरच्चन्द्रिकाभिः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २१
कुपितशिखरिकन्या चित्तशीतांशुकान्त
द्रुतिषु शशिमयूखैः सुन्दरैर्मन्दहासैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २२

प्रणमति विहरद्भिस्तत्र सम्प्रीति दत्त-
प्रविमलतरहारभ्रान्तिदैर्मन्दहासैः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २३
स्फुटविचकलितार्या तुङ्गवक्षोजकुम्भ-
श्रितकुवलयमालेनामलेन स्मितेन।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २४
स्फुरदधररुचिश्रीसङ्गिना पद्मराग-
द्युतिकवचितहीराभेन मन्दस्मितेन।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २५
सुकृतिहृदयसौध प्रोल्लसच्चन्द्रिकाभिः
दरहसितरुचीभिर्दारितार्तिच्छटाभिः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २६
कमलजठरनिर्यच्चन्द्रिकाभ्रान्तिकृद्भिः
शुभतरदरहासैराननान्निसरद्भिः।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २७
श्रितजनघनपुण्यश्रेणिमल्लीमतल्ली-
कुसुमसमुदयेनोदारमन्दस्मितेन।
अघमखिलमपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिर्विधत्ताम्।। २८
तारावलीस्तुतिमिमां तरुणेन्दुमौळेः
शृण्वन्ति ये भुवि पठन्ति शिवः स तेषाम्।
दीर्घायुरुन्नतविभूतिसुतर्द्धि शम्भु
भक्त्याद्यभीष्टमखिलं प्रददाति हृष्टः।। २९

।। इति श्री श्रीधरवेङ्कटेशार्य कृतौ तारावलीस्तोत्रं सम्पूर्णम् ।।